श्रीरामजयम्॥

परिभाषेन्दुशेखरः।।

*अनुबन्धचतुष्टयनिरूपणम् ।*

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ।।०।।

प्राचीन व्याकरण तन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्तिकयोरुपनिबद्धानि यानि परिभाषारूपणि तानि व्याख्यास्यन्ते ।

# शास्त्रत्वसम्पादनोद्देशप्रकरणम्

ननु लण्-अइउण् सूत्रयोर्णकारद्वयस्यैवोपादानेनाणिण्ग्रहणेषु सन्देहादनिर्णयोऽत आह-
व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्।। १ ।।
विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानात् शिष्टकृतात् प्रतिपत्तिः निश्चयो यतः सन्देहाच्छास्त्रम् अलक्षणम् अननुष्ठापकं लक्षणमलक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः। असन्दिग्धानुष्ठानसिद्ध्यर्थेऽत्र शास्त्रे सन्दिग्धोच्चारणरूपाचार्यव्यवहारेण सन्देहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत्।। तेनाणुदित्सवर्णस्येतत्परिहाराय पूर्वेणाण् ग्रहणम्, परेणेण् ग्रहणमिति लण् सूत्रे भाष्ये स्पष्टम्।। १ ।।

तत्र संज्ञापरिभाषाविषये पक्षद्वयमाह-
यथोद्देशं संज्ञापरिभाषम् । कार्यकालं संज्ञापरिभाषम् ।। २ ।।
उद्देशमनतिक्रम्य यथोद्देशम् । उद्देश उपदेशदेशः । अधिकरणसाधनश्चायम्। यत्र देशे उपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः। देशश्चोच्चारणकाल एवात्र व्यवह्रियते। तत्तद्वाक्यार्थबोधे जाते 'भविष्यति किञ्चिदनेन प्रयोजनम्' इति ज्ञानमात्रेण सन्तुष्यद् यथाश्रुतग्राहिप्रतिपत्रपेक्षोऽयं पक्ष ईदूदेत्सूत्रे कैयटः।
केचित्तु - परिभाषाविषये तस्मिन्नित्यादि वाक्यार्थबोधे सप्तमीनिर्देशादिक्वेति पर्यालोचनायां सकलतत्तद्विध्युपस्थितौ सकलतत्तत्संस्काराय गुणभेदं परिकल्प्यैकवाक्यतयैव नियमः। कार्यकालपक्षेतु त्रिपाद्यामप्युपस्थितिरिति विशेषः। एतदेवाभिप्रेत्य 'अधिकारो नाम त्रिप्रकारः, कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा - 'प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति' इति 'षष्ठी स्थाने' इति सूत्रे भाष्य उक्तम् । अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते । कश्चित्परिभाषारूप इति कैयटः। दीपो यथा - प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। एतच्च पक्षद्वय साधारणं भाष्यम्, पक्षद्वयेऽपि प्रदेशैकवाक्यतया इतः प्रतीतेः।।
तत्रैतावान् विशेषः - यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यतया परिभाषाणाम् । तदुक्तम् - 'क्ङिति च' इति सूत्रे कैयटे। 'यथोद्देशे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जत' इति। कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति। अत्र एकदेशस्थ इत्यनेन तत्र तत्र बुद्धावपि तद्देशस्थत्वं वारयति, यथा - व्यवहर्त्तॄणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः, किन्त्वभिजनदेशीयत्व व्यवहार एव, तद्वन्निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः 'क्ङिति च' इत्यत्र भाष्ये। तत्रैकवाक्यता पर्युदासेन प्रसज्य प्रतिषेधेऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यता व्यवहारः।।
आकडाराधिकारस्थभपदसंज्ञाविशये तु यथोद्देशपक्ष एवेति तत्रत्यपरत्वेनैव बाध्यभाधकभावः। पदादिसंज्ञनां तत्र जातशक्तिग्रहणेव त्रिपाद्यमपि व्यवहारः। अत एव पूर्वत्रासिद्धमिति सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य, कार्यकालपक्षाश्रयेण समाहितमित्याहुः। यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये।।
कार्यकालमित्यस्य च कार्येण काल्यते = स्वसन्निधिं प्राप्यत इत्यर्थः। कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिन्हितपरिभाषाणामाक्षेप इति यावत्।
अत एव 'पूर्वत्रासिद्धम्' इति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताद्यायीस्थ परिभाषाणां अप्रवृत्तिमाशङ्क्य यद्यपीदं तत्रासिद्धं तत्विह सिद्धमित्युक्त्वा, तावताऽप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने-'कार्यकालं संज्ञापरिभाषम्' यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तम्।
न च कार्यकाल पक्षे 'ङमो ह्रस्वात्' इत्यदौ ' तस्मादित्युत्तरस्य' 'तस्मिन्नितिनिर्दिष्टे पूर्वस्य' इति परिभाषाद्वयोपस्थितौ परत्वात् 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति तस्मिन्निति सूत्रस्थभाष्यासङ्गतिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासङ्गत्यारत्तेः, स्पष्टं चेदम् 'इकोगुण' इत्यत्र कैयट इति वाच्यम्

**विप्रतिषेधसूत्रेऽष्टाध्यायीस्थपाठकृतपरत्वस्यऽऽश्रयणेनादोषात्। नहि कार्यकालपक्ष इत्येतावता तदपैति। पक्षद्वयेऽपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात्। नहि तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं सम्भवति। नाप्यस्मदादिबुद्धिजननेन स्वदेशत्यागो भवति। अत एव भाष्ये तस्मिन्निति सूत्रे कैयटः - सूत्र पाठापेक्षया परत्वस्य व्यवसथापकत्वमिति। इकोगुणेति सूत्रस्थ कैयटस्तु तिन्त्य एव ; अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्त्वेन क्वापि परत्वं नस्यात्। किञ्च क्ङिति चेति सूत्रस्थ कैयटरीत्या विधिसूत्राणां यथोद्देश पक्षे परिभाषादेशे सन्निधानेन तेषां परत्वं व्याहन्येत। एवञ्च वृक्षेभ्य इत्यत्र सुपिचेत्यतः परत्वात् 'बहुवचने झल्येत्' इत्येत्वमित्याद्युच्छिद्येत, इत्यलम्।।**

इत्संज्ञका अनुबन्धाः, तेष्ववयवानवयवत्वसन्देह आह -अनेकान्ताः अनुबन्धाः ।। ३ ।।
अनेकान्ताः = अनवयवाः इत्यर्थः। यो ह्यनवयव स कदाचित्तत्रोपलभ्यत एव, अयं तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात्। शित्किदित्यादौ समीपेऽवयवत्वारोपेण समासो बोध्यः। 'वुण्छण्कठ्' इत्यादौ णित्वप्रयुक्तं कार्यं पूर्वसयैवेत्यादि तु व्याख्यानते निर्णेयम्। 'हलन्त्यम्' इत्यत्रान्त्य शब्दः परसमीप बोधकः।।

वस्तुतस्तु -एकान्ताः।। ४ ।।
इत्येव न्याय्यम्, शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च। अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषूपलभ्यते। नैवमयम्। एवं हि बहुव्रीहिरपि न्यायत एवोपपन्नः, अन्त्यादि शब्दे लक्षणा च न।।

नन्वेकान्तत्वेऽनेकाल्त्वादेव औशादीनां सर्वादेशत्व सिद्ध्या 'अनेकाल्' सूत्रे शिद्ग्रहणं व्यर्थमत आह -नानुबन्धकृतमनेकाल्त्वम् ।। ५ ।।
शिद्ग्रहणमेवैतद्ज्ञापकम्, तेन 'अर्वणस्तृ' इत्यादेर्न सर्वादेशत्वम्। डादि विषये तु सर्वादेशत्वं विनाऽनुबन्धत्वस्यैवाभावेनऽऽनुपूर्व्यात्सिद्धम्।।

नन्वेवमपि 'अवदातं मुखम्' इत्यत्र पलोपोत्तरमात्वे कृतेऽदाबिति घुसंज्ञाप्रतिषेधो न स्यात्, दैपः पकारसत्वेऽनेजन्तत्वाप्राप्त्या पलोपोत्तरं पकाराभावेनास्य दाप्त्वाभावादत आह -नानुबन्धकृतमनेजम्तत्वम्।। ६ ।।
'उदीचामाङः' इति निर्देशोऽस्या ज्ञापकः। 'आदेच उपजेशे' इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्वं क्रियते, ङकारसत्वेत्वेजन्तत्वाभावादात्वाप्राप्तेस्तस्यासङ्गतिः।।

नन्वेवमपि 'वाऽसरूप' सूत्रेण कविषयेऽणोप्यापत्तिरित्यत आह-नानुबन्धकृतमसारूप्यम्।। ७ ।।
'ददातिदधात्योर्विभाषा' इति णबाधकशस्य विकल्पविधायकमस्यां ज्ञापकम्, तेन 'गोदः' इत्यादौ नाणिति 'वाऽसरूप' सूत्रे भाष्ये स्पष्टम्।।

ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्, प्रकरणस्याभिधानियामकत्वसिद्धात् 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः' इति न्यायात्। अस्ति च प्रकृते बह्वादीनां सङ्ख्यासंज्ञाकृतेति ज्ञानरूपं प्रकरणम्, नतु लोकप्रसिद्धैकद्व्यादीनामित्यत आह -उभयगतिरिह भवति ।। ८ ।।
इह=शास्त्रे। 'सङ्ख्यायाः अतिशदन्तायाः' इति निषेधोऽस्या ज्ञापकः। न हि कृत्रिमा सङ्ख्या त्यन्ता शदन्ता वाऽस्ति, तेन 'कर्तरि कर्तरिकर्मव्यतिहारे' 'कण्वमेघेभ्यः करणे' 'विप्रतिषिद्धं चानधिकरणे' इत्यादौ लौकिकक्रियाद्रव्याद्यवगतिः। तत्र क्वोभय गतिः, क्वाकृत्रिमस्यैव, क्व कृत्रिमस्यैवेत्यत्र लक्ष्यानुसारि व्याख्यानमेव शरणम्। अत एव आम्रेडित शब्देन कृत्रिमस्यैव ग्रहणं न तु द्विस्त्रिर्घुष्टमात्रस्य। स्पष्टञ्चेदं सङ्ख्या संज्ञा सूत्रे भाष्ये।
यत्तु - संज्ञाशास्त्राणां मच्छास्त्रेऽनेन शब्देनैत एवेति नियमार्थत्वं कृत्रिमाकृत्रिम न्यायबीजमिति। तन्न ; तेषामगृहीतशक्तिग्राहकत्वेन विधित्वे सम्भवति, नियमत्वायोगात्। 'सर्वे सर्वार्थ वाचकाः' इत्यभ्युपगमोऽपि योगिदृष्ट्या, नत्वस्मद्दृष्ट्या, विशिष्य सर्वशब्दार्थज्ञनस्याशक्यत्वात्। सामाम्यज्ञानं तुभोधोपयोगीत्यन्यत्र निरूपितम्।।

ननु 'अध्येता' 'शयिता' इत्यादाविङ्शीङोर्ङित्वाद् गुणनिषेधः स्यादत आह -कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते ।। ९ ।।
'स्थण्डिलाच्छयितरि' इति निर्देशश्चास्यां ज्ञापकः। 'ऊर्णुनविषति' इत्यादि सिद्धये कार्यमनुभवन्निति। अत्र हि 'द्विर्वचनेऽचि' इति नु शब्दस्य द्वित्वम्, अन्यथा 'सन्यङोः' इत्यस्य षष्ट्यन्तत्वात्सन्नन्तस्य कार्यित्वेन इसो द्वित्वनिमित्तत्वाभावात्तत्प्रवृत्तिर्न स्यात्।
वस्तुतः - समवायिकारण निमित्तकारणयोर्भदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्वेनाऽऽश्रयणाभावेन नैषा ज्ञापकसाध्या। अत एव हः प्रयुक्तः। स हि तत्वेनाऽनाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति तत्वम्। 'द्विर्वचनेऽचि' इत्यत्र भाष्ये ध्वनितैषा।।

ननु 'प्रणिदापयति' इत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्नस्यादत आह -यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते
।। १० ।।
यमुद्दिश्याऽऽगमो विहितः, स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेन तद्बोधकेन शब्धेन गृह्यते=बोध्यत

इत्यर्थः। तत्र तद्गुणीभूता इत्यंशो बीजकथनम्। लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते।
यमुद्दिश्य विहित इत्युक्तेः 'प्रनिदारयति' इत्यादौ न दारित्यस्य घुत्वम्।
'आनेमुक्' इति मुग्विधानसामर्थ्यादेषाऽनित्या। अन्यथा 'पचमानः' इत्यादावकारस्य मुकि-अनया परिभाषया विशिष्टस्य सवर्णदीर्गे तद्वैयर्थ्यं स्पष्टमेव। तेन 'दिदीये' इत्यादौ यणादि न, 'जहार' इत्यादौ 'आत औ णलः' इति च न।
न चाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमित् वाच्यम्, वचनेनावयवत्वबोधनात्। तस्य चावयवत्वसादृश्ये पर्यवसानं बोध्यम्।
न चोक्तज्ञापकाद्वर्णग्रहणेऽस्या अप्रवृत्तिरिरिति वाच्यम् ; 'आने मुक्' इति सूत्र भाष्येऽकारस्याङ्गावयवस्य मुगित्यर्थे 'पचमानः' इत्यत्र 'तास्यनुदात्तेत्' इति स्वरो म स्यादित्याशङ्ख्यादुपदेशभक्तस्तद्ग्रहणेन ग्राहिष्यत इत्युक्तेरसङ्गत्यापत्तेः।
क्रुञ्च ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थे 'कुर्वन्नास्ते' इत्यादौ ङमो ङमुडागमे
णत्वप्राप्तिमाशङ्क्य 'यदागमाः' इति न्यायेनाद्यनस्यापि पदान्तग्रहणेन ग्रहणात् 'पदान्तस्य' इति निषेध इत्यनया
परिभाषया 'आगमानामागमिधर्मवैशिष्ट्यमपि होध्यते' इत्याशयक 'ङमुट्' सूत्रस्थभाष्यासङ्गतेः।
'अनागमकानां सागमकाः आदेशाः' इत्यस्य त्वयमर्थः - आर्धधातुकस्येडागम इत्यर्थे ज्ञाते, नित्येषु शब्देष्वागमविधानानुपत्या अर्थापत्तिमूलकवाक्यान्तरकल्पनेनेड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति। एवञ्चादेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः।
स्थानिवत्सूत्रे च नेदृशादेशग्रहणम्। साक्षादष्टाद्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात्। किञ्चेवं सति स्थानिबुद्ध्यैव कार्यप्रवृत्या 'लावस्थायामडिति' सिद्धन्तासङ्गतिः। स्थानिवद्भावविषये 'निर्दिश्यमानस्य' इति परिभाषायाः प्रवृत्तौ 'तिसृणाम्' इतियतिर परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्ख्य, 'सकृद्गति' न्यायेन समाधानपरभाष्यासङ्गतिः।
'एरुः' इत्यादौ स्थानषष्टीनार्देशात्तदन्तपरतया पठितवाक्यस्यैव समुदायादेशपरत्वेनाऽऽदेशग्रहणसामर्थ्यात्तस्य स्थानिवत्सूत्रे ग्रहणेन न दोषः। आनुमानिक सथान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इति 'अचः परस्मिन्' इत्यादेर्नासङ्गतिः।
एतेन - 'यदागमाः' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम्। एतत्सर्वम् 'दाधाघ्वदाप्' इति सूत्रे भाष्ये स्पष्टम्।।

नन्वेवम् उदस्थादित्यादौ 'उदःस्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णापत्तिरत आह -निर्दिश्यमानस्याऽऽदेशा भवन्ति।। ११ ।।
'षष्ठी स्थाने योगा' इति सूत्रमावर्तते। तत्र द्वितीयस्यायमर्थः - षष्ठ्यन्तं निर्दिश्यमानम् = उच्चार्यमाणमुच्चार्यमाणसजातीयमेव, निर्दिश्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपितसम्बन्धेन युज्यते, न तु प्रतीयमानमित्यर्थः। तेनेदं सिद्धम्। न च 'अस्य च्वौ' इत्यादौ दीर्घाणामादेशानापत्तिः, तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्, जातिपक्षे दोषाभावात्। किञ्च 'न भूसुधियोः' इति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमाकार्यबोधान्न दोषः।
इयङुवङोर्ङित्वं तु इवर्णोवर्णान्तश्नुधातुभ्रुवामित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय। रीरिङोर्ङित्वं तु स्पष्टार्थमेव।। एतेनेदं ङित्वं वर्णग्रहणे निर्दिश्यमान परिभाषाया अप्रवृत्तिज्ञापकमित्यपास्तम्। 'हयवरट्' सूत्रस्थेन 'अयोगवहानामुपदेशेऽलोन्त्यविधिः प्रयोजनम्, वृक्षस्त्तत्र। नैतदस्ति प्रयोजनम्, निर्दिश्यमानस्येत्येव सिद्धम्' - इति भाष्येण विरोधात्।
अनया परिभाषया 'येन विधिः' इति सूत्रबोधिततदन्तस्य सथानिवत्वाभाव बोधनम्, यदागमा इति लब्धस्य च।
तेन 'सुपदः' 'उदस्थात्' इत्यादि सिद्धिः। अनया च स्वस्वनिमित्तसन्निधापितानाम् 'अलोऽन्त्यस्य' इत्यादीनां समावेश एव, न बाध्यबाधक भावः, विरोधाभावात्। नाप्येतयोरङ्गाङ्गिभवः, उभयोरपि परार्थत्वेन तदयोघात्। 'अनेकाल् शित्' इति सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते।
यत्तु 'आदेः परस्य' 'अलोन्त्यस्य' इत्येतावेव तद्बाधकाविति तन्न ; 'उदःस्थात्' इति सूत्रविषयेऽस्याः 'पादः पत्' इति सूत्रे भाष्ये सञ्चारितत्वात्। नाप्येतयोरियं बाधिका, एतयोर्निविषयत्वप्रसङ्गादिति 'ति विंशतेः' इति सूत्रे कैयटः। अकज्विषये नायं न्यायः, स्थानिवद्भावेन तन्मध्यपत्तन्यायेन तद्बुधायैव कार्यजनकत्वात्। इयञ्च अवयवषष्ठीविषयेऽपि। अत एव 'तदोः सः साविति' सत्वम्, 'अतिस्यः' इत्यत्रोपसर्गतकारस्य न। निर्दिश्यमानयुष्मदाद्यवयवमपर्यम्तस्यैव यूयादयः, न तु 'अतियूयम्' इत्यादौ सोपसर्गावयवमपर्यन्तस्येति बोध्यम्। 'पादः पत्' इति सूत्रे 'षष्ठी स्थाने' इति सूत्रे च भाष्ये च स्पष्टैषा।।

ननु 'चेता' इत्यादौ ह्रस्वस्येकारस्य प्रमाणत आन्तर्यादकारोऽपि स्यादत आह -यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः।। १२ ।।
अनेकविधम् = स्थानगुणप्रमाणकृतम्। अत्र मानम् 'षष्ठी स्थाने' इत्यत एकदेशानुवृत्या स्थाने ग्रहणेऽनुवर्तमाने पुनः 'स्थानेन्तरतमः' इति सूत्रे स्थाने ग्रहणमेव। तद्धि तृतीयया विपरिणम्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति सम्भवे स्थानत एवान्तरतम इत्यर्थकम्।
तमब्ग्रहणमेवानेकविधान्तर्य सत्तागमकम्। स्थानतः = स्थानेनेत्यर्थः। तत्र स्थानत आन्तर्यम् 'इको यणचि'

इत्यादौ प्रसिद्धमेव। अर्थतः 'पद्दन्नो' इत्यादौ स्थान्यर्थाभिधान समर्थस्यैवाऽऽदेशतेति सिद्धान्ताद्यदर्थाभिधानसमर्थो यः, स तस्यादेश इति तत्समानार्थतत्समानवर्णपदादीनां ते, तृज्वत्क्रोष्टुरिति च। गुणतो 'वाग्घरिः' इत्यादौ। प्रमाणतः 'अदसोऽसेः' इत्यादौ। 'स्थानेऽन्तरतमः' सूत्रे भाष्ये स्पष्टैषा।।

ननु 'प्रोढवान्' इत्यत्र 'प्रादूहोढेति' वृद्धिः स्यादत आह-अर्थवद्ग्रहणे नानर्थकस्य।। १३ ।।
विशिष्टरूपोपादाने। उपस्थितार्थस्य शब्दं प्रति विशेषणतयाऽन्वयसम्भवे त्यागे मानाभावोऽस्या मूलम्। अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यते इति 'सङ्ख्यायाः' इति सूत्रे भाष्ये स्पष्टम्। इयं वर्ण ग्रहणेषु नेति 'लस्य' इत्यत्र भाष्ये

स्पष्टम्। अत एव एषा विशिष्टरूपोपादान विषयेति-वृद्धाः। एतन्मूलकमेव 'येन विधिः' इत्यत्र भाष्ये पठ्यते 'अलैवानर्थकेन तदन्तविधिः' इति। किञ्च 'स्वं रूपम्' इति शास्त्रे स्वशब्देनाऽऽत्मीयवाचिनाऽर्थो गृह्यते, रूप शब्देन स्वरूपम्, एवञ्च तदुभयं शब्दस्य संज्ञीति तदर्थः। तत्रार्थो न विशेष्यस्तत्र शस्त्रीयोपकार्यासम्भवात्, किन्तु शब्दविशेषणम्। एवञ्चार्थविशिष्टः शब्दः संज्ञीति फलितम्। तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम्।।

नन्वेवमपि 'महद्भतश्चन्द्रमाः' इत्यत्र 'आन्महतः' इत्यात्वापत्तिरत आह-गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः
।। १४ ।।

गुणादागतो गौणः। यथा - गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः। अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुद्ध्यते। मुखमिव प्रधानत्वात् मुख्यः = प्रथम इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुखार्थारोपेण प्रवर्थते। एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्। तेन 'प्रियत्रयाणाम्' इत्यादौ त्रयादेशो भवत्येव, तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तगौणत्वाभावात्। किञ्चायं न्यायो न प्रातिपदिककार्ये, किन्तूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य एव। परिनिष्टितस्य पदान्तरसम्बन्धे हि 'गौर्वाहीकः' इत्यादौ गौणत्वप्रतीतिर्नतु प्रातिपदिकसम्स्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्यभावे बीजम्।

श्वशुरसदृशस्यापत्यमित्यर्थके 'श्वाशुरिः' इत्यादावत इञः सिद्धये - उपात्तमित्यादि। न च प्रातिपतिकपदं तादृशमिति वाच्यम्, तेन हि प्रातिपदिकपदवत्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात्। निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यनिधायके 'ओत्' इत्यादावेतत्प्रवृत् 'गोभवत्त्या' इत्यादौ दोषो न।

'गां पाठय' इत्यादौ मुख्य गोपदार्थस्य पाठनकर्मत्वासम्भवेन निभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेण 'अत्वं त्वं सम्पद्यते, 'अमहान् महान्भूतः, 'त्वद्भवतिठ इत्यादि भाश्यप्रयोगे त्वाद्यादेशदीर्गादीनां करणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम्। अन्यथा वाक्यसंस्कार पक्षे तेषु तदनापत्तिः।

कारकादिमात्रप्रयोगे योग्यसर्वक्रियाध्यहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियाऽन्वयकाले पदस्यैव गौणर्थत्वप्रतीतिः प्रयोक्तुरपि।

अर्थाश्रय एतदेवं भवति, शब्दाश्रये च वृद्ध्यात्वे-इति 'ओत्' सूत्रस्थ भाष्यस्य लौकिकार्थवत्वयोग्यपदाश्रय
एष न्यायः, तद्रहितशब्दाश्रये च ते इत्यर्थः। 'गोतः' इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्वेनोक्तरीत्यैवतस्य
भाष्यस्य व्याख्येयत्वादित्यलम्।।

अर्थवद्ग्रहणे - इत्यस्यापवादमाह :-अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति।। १५ ।।

'येन विधिः' इत्यत्र भाष्ये वचन रूपेण पठितैषा। तेन 'राज्ञा' 'साम्ना' इत्याद्वल्लोपः, 'दण्डी' 'वाग्मी' इत्यादौ 'इन्हन्' इति नियमः, 'सुपयाः' 'सुस्रोताः' इत्यादौ 'अत्वसन्तस्य' इति दीर्गः, 'सुशर्मा' 'सुप्रथिमा' इत्यादौ 'मनः' इति ङीब्निषेधश्च सिद्धः। अन्ये तु 'परिवीविषीध्वम्' इत्यत्र ढत्वव्यावृत्तये क्रियमाणात् 'इणः षीध्वम्' इत्यत्राङ्गग्रहणादर्थवत्परिभाषाऽनित्या, तन्मूलकमिदमित्याहुः। 'विभाषेटः' इत्यत्रानर्थकस्यैव षीध्वमः सम्भवादत्रापि तस्यैव ग्रहणमिति भ्रमवारणाय 'अङ्गात्' इति परे।।

ननु 'उश्च' इत्यत्र 'लिङ्सिचौ' इत्यतः 'आत्मनेपदेषु' इत्येव सम्बध्येत, अनन्तरत्वादत आह :-एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः।। १६ ।।

वा-शब्द एवार्थे। परस्परान्वितार्थकपदानाम्-सहैवानुवृत्तिनिवृत्ती इत्यर्थः। एककार्य नियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः। यत्तु-अत्र ज्ञापकम् 'नेड्वशि' इत्यत इडित्यनुवर्तमाने 'आर्धधातुकस्येड्' इत्यत्र पुनरिड्ग्रहणम्। तद्धि नेत्यस्यासम्बन्धार्थमिति। तन्न ; 'दीधीवेवूटाम्' इति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड् ग्रहणेऽनुवर्तमाने पुनरिड्ग्रहणस्येटो गुणरूपविकारार्थकत्वस्योक्तत्वेन तद्विरोधात्। नञो निवृत्तिस्तु 'क्वचिदेकदेशोऽपि अनुवर्तते' इति न्यायेन सिद्धा। वस्तु तस्तु 'दीधीवेवीटाम्' इति सूत्रस्थ भाष्यमेकदेश्युक्तिः, 'आर्धधातुकस्य' इति सूत्रस्थेड्ग्रहणस्य 'नेड्वशि' इति सूत्रे भाष्ये प्रत्याख्यानात्, तत्करणेन गुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात्।।

ननु - अलुगधिक्रः प्रागनङः, उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनुपपन्नम्, एकयोगनिर्दिष्टत्वात्। तथा 'दामहायनान्ताच्च' इत्यादौ 'सङ्ख्याऽव्ययादेः' इत्यतः सङ्ख्यादेरित्यनुवर्ततेऽव्ययादेरिति निवृत्तमिति चानुपपन्नमत आह -एकयोगनिर्दिष्टानामेदेशोऽप्यनुवर्तते।। १७ ।।

एकार्थे योगः = सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ इति 'पक्षात्तिः' इति सूत्रे कैयटः। तावन्मात्रांषे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम्। स्पष्टा चेयम् 'दामहायनान्ताच्च' इति सूत्रे 'औतोऽम्शसोः' इति सूत्रे च भाष्ये पूर्वा च।।

ननु 'त्यदादीनामः' इतियादिना 'इमम्' इत्यादावनुनासिकः स्यादत आह-भाव्यमानेन सवर्णानां ग्रहणं न।। १८ ।।

अणुदित्सूत्रे 'अप्रत्ययः' इत्यनेन सामर्त्यात्सूत्रप्राप्तम्, जातिपक्षेणप्राप्तम्,गुणाभेदकत्वेनच प्राप्तम्, नेत्यर्थः। अतएवाणुदित्सूत्रे प्रत्ययाऽऽदेशाऽऽगमेषु सवर्णग्रहणाभावं प्रकारान्तरेणोक्त्वा, 'एवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति, तज्ज्ञापयति भवत्येषापरिभाषा 'भाव्यमानेन सवर्णानां ग्रहणं न' इति। किञ्च, 'ज्याद ईयसः' इत्येवान्तर्यतो दीर्घे सिद्धे 'ज्यादात्' इति दीर्गोच्चारणमस्या ज्ञापकम्। अणुदित्सूत्रे

'ज्यादात्' इति सूत्रे च भाष्ये स्पष्टैषा।
'चोः कुः' इत्यादौ भाव्यमानेनापि सवर्णग्रहणम्, विधेये उदिदुच्चारणसामर्थ्यात्। एतदेवाभिप्रेत्य 'भाव्यमानाऽण् सवर्णान्न गृणहाति' इति नव्याः पठन्ति।।

नन्वेवम् 'अदसोऽसेः' इत्यादिना 'अमू' इत्यादौ दीर्गविधानं न स्यादत आह :-भाव्यमानोऽप्युकारः सवर्णान् गृणहाति।। १९ ।।
'दिव उत्' 'ॠत उत्' इति तपरकरणमस्या ज्ञपकम्। 'तित्स्वरितम्' इति सूत्रे भाष्ये स्पष्टैषा।।

ननु 'गवे हितं गोहितम्' इत्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिरत आह :-वर्णाश्रये नास्ति प्रत्ययलक्षणम्।। २०।।
वर्णप्राधान्यविषयमेतत्। तत्वं च 'प्रत्ययलोपे' इति सूत्रे स्थानिवदित्यनुवृत्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययेतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्यर्थमेतत्सिद्धम्। वर्णपराधान्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितनिशेष्यतारूपं च। तेन 'गोहितम्' इत्यादौ अवादि न, 'चित्रायां जाता चित्रा' इत्यादावण्योऽकारस्तदन्तान् ङीप् च न। इयमल्विधौ स्थानिवत्वाप्राप्तावपि प्राप्तप्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये।।

ननु 'अतः कृकमि' इत्यत्र कमि ग्रहणे सिद्धे, कंसग्रहणं व्यर्थम्, अत आह :-उणादयोऽव्युत्पन्नानि प्रातिपदिकानि।। २१।।

ननु 'देवदत्तच्चिकीर्षति' इत्यादौ देवादेः सन्नन्तत्वप्रयुक्तधातुत्वाद्यापत्तिरत आह :-प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्।। २२ ।।

येन विधिरिति सूत्रे भाष्य एतद्घटकतदन्तांशस्यापवादः पठ्यते :-प्रत्ययग्रहणं चापञ्चम्याः।। २३ ।।

नन्वेवम् 'कुमारी ब्राम्हणीरूपा' इत्यादौ 'घरूप' इति ह्रस्वापत्तिरत आहः-उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ।। २४ ।।

स्त्रीप्रत्यये चानुपसर्जने न ।। २५ ।।
विषयसप्तमीयम्। यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाऽऽह तत्र तदादिनियमो न, यस्त्वप्राधान्येनाऽऽह तत्र तदादिनियमोऽस्त्येवेत्यर्थः। प्रत्यासत्या यस्य समुदायस्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम्। तेन 'अतिराजकुमारिः' इत्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थं प्रत्युपसर्जनत्वेऽपि तदर्थं प्रत्यनुपसर्जनत्वात् तदादानियमाभावेन ह्रस्व सिद्धिः। अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वम्, असम्भवात्। अस्याः 'प्रत्ययग्रहणे' इत्यस्यापवादत्वात् तदेकवाक्यत्वापन्नत्वाच्चात्रापि ग्रहणपद सम्बन्धेन स्त्रीप्रत्ययसामान्यग्रहणे तद्विशेषग्रहणे च प्रवृत्तिः, न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे। ध्वनितञ्चेदम् 'अर्थवत्' सूत्रे भाष्ये। इयं च वाचनिक्येव। 'ष्यङः' इति सूत्रे भाष्ये स्पष्टा।।

नन्वेवम् "तरप्तमपौ घः" इत्यादिना तरबन्तादेः संज्ञा स्यादत आह -
संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति||२६||
"सूप्तिङन्तम्" इत्यन्तग्रहणमस्यां ज्ञापकम्। न च प्रत्यययोः पदसंज्ञायामपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणाभावात् ज्ञापितेऽपि फलाभाव इति वाच्यम्, पदसंज्ञायाः "स्वादिषु" इति विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात् "सुप्तिङन्तम्"इति सूत्रे भाष्ये स्पष्टा॥

ननु 'अवतप्ते नकुलस्थितम्' इत्यादौ नकुलस्थित शब्दस्य क्तान्तत्वाभावात् समासो न स्यादत आहः-कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्।। २७ ।।

पदाङ्गाधिकारे तस्य च तदन्तस्य च ।। २८ ।।पदमङ्गं च विशेष्यं विशेषणेन च तदन्त विधिः। तेन 'इष्टकचितम्, पक्वेष्टकचितम्' इत्यादौ अत एव 'तदुत्तरपदस्य' इति पाठोऽयुक्त इति भाष्ये स्पष्टम्। अत्र पदशब्देनोत्तरपदाधिकारः, केवलपदाधिकारश्च।

नन्वेवम् 'अस्यापत्यमिः' इत्यादावदन्तप्रातिपदिकाभावादिञ् न स्यात्, अत आह :-व्यपदेशिवदेकस्मिन् ।। २९ ।।
तस्मादेकस्मिन्स्तत्तद्धर्मारोपेण युगपत् यथा ज्येष्टत्वादिव्यवहारः, यथा च 'शिलापुत्रकस्य शरूरम्' इत्यादेवेकस्मिन्नरोपितानेककावस्थाभिः समुदायरूपत्वाद्यारोपेणैतस्य शरूरमित्यादिव्यवहारः, तथात्रैकाच्त्वादि व्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम्।
न चासहाय एवैतत्प्रवृत्तौ भवतीत्यत्र 'भू' इत्यस्याङ्गत्वानापत्तिः, ससहायत्वादिति वाच्यम्, शपमादायाङ्गत्वे कार्ये यस्माद्विहितस्तदादित्वेतस्य ससहायत्वाभावाल्लोके विजातीयकन्यादिसत्वेऽप्येकपुत्रस्य तस्मिन्नेवयमेव ज्येष्ठ इत्यादिव्यवहारवत्।
न चैवम् 'निजौ चत्वार एकाचः' इति भाष्यासङ्गतिः, इकारस्यासहायत्वाभावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम्, 'एकस्मिन्'

इत्यस्यापर्यालोचनया तत्प्रवृत्तेः।
अर्थवता व्यपदेशिवद्भाव इत्यत्रार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते। अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यत इति तदर्थः, प्रायोऽसहाय एवार्थवत्वात्। 'कुरुते' इत्यादौ तशब्दाकारोऽचामन्त्य इति व्यवहारे स
आदिर्यस्येति व्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरित्यन्यत्र विस्तरः।।

ननु गर्गादिभ्यो विहित य़ञ् तदन्त विधिना परमगर्गादिभ्योऽपि स्यात्, अत आहः-ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।। ३० ।।
इयं च 'समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जम्' इति वार्तिकस्थप्रत्ययांशानुवादः। अत एव

अनिष्टत्वात्, एकयोगेऽपि तावत उत्तरत्रनुवृत्तौ बाधकाभवाच्च।
सङ्ख्यादित्वात् तद्वैयर्थ्यं स्पष्टमेव।
तेन 'अहन्' इत्यादेः परमाहन्शब्दे केवलाहन्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः।। ३१ ।।

ननु 'वान्तो यि' इत्यादौ यादौ प्रत्यय इत्यर्थः कथम्? अत आह :-यस्मिन्विधिस्तदादावल्ग्रहणे ।। ३२ ।।

तदन्तविधेरपवाद इयम्| वाचनिक्येषा, "येन विधिः" इत्यत्र भाष्ये पठिता| अस्याश्च स्वरूपसती सप्तमी निमित्तम्| अत एव "नेड्वशि कृति" इत्यादौ वशादेः कृत इत्याद्यर्थलाभः|
इयं च "आर्धधातुकस्येड्" इति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद् विशेष्यविशेषणयोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते। तेन "ङः सि धुट्" इत्यादौ सादेः परस्येति नार्थः,
"तीषसह" "से ऽसिचि" इत्यादौ यथा तादेरित्याद्यर्थलाभः, तथा शब्देन्दुशखरे निरूपितम्॥३२॥
"घटपटम्, घटपटौ" इत्यादिसिद्धय आह ---

सर्वो द्वन्द्वो विभाषयैकवद्भवति॥३३॥
"द्वन्द्वश्च प्राणि" इत्यादिप्रकरणविषयः सर्वो द्वन्द्व इत्यर्थः, "चार्थे द्वन्द्वः" इति सूत्रेण समाहारेतरयोगयोरविशेषेण द्वन्द्वविधानात् न्यायसिद्धेयम्। "तिष्यपुनर्वस्वोः" इति सूत्रस्थं बहुवचनस्येति ग्रहणमस्या ज्ञापकम्। तद्धीदम् "तिष्यपुनर्वसु" इत्यत्र तद्व्यावृत्यर्थम्।
न चैवमप्यत्र "जातिरप्राणिनाम्" इति नित्यैकवद्भावेन बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम्, तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात्। न चैते प्राणिन इति वाच्यम्, "आपोमयः प्राणः" इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात। स्पष्टम् चेदम् "तिष्यपुनर्वस्वोः" इति सूत्रे भाष्ये।

अत एव "द्वन्द्वश्च प्राणि-" इत्यादेः प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न॥३३॥

सर्वे विधयश्छन्दसि विकल्प्यन्ते||

"व्यत्ययो बहुलम्"इति सूत्रे भाष्ये बहुलमिति योगविभागेन"षष्ठीयुक्तश्छन्दसि"इति सूत्रे वेति योगविभागेन चैषा साधिता। तेन"प्रतीपमन्य ऊर्मिर्युध्यति"इत्यादि सिद्धम्। युद्धयत इति प्राप्नोति॥३४॥

ननु क्षिय इत्यादावियङ् कथम्? अत आह ---

प्रकृतिवदनुकरणं भवति ।। ३५ ।।

क्षिय इतीयङ् निर्देशो ऽस्या ज्ञापकः। तत्रेव प्रातिपदिकत्व निबन्धन विभक्तिकरणादनित्या चेयमिति"क्षियो दीर्घात्"इत सूत्रे भाष्ये स्पष्टम्।।। ३५॥

ननु"रामौ"इत्यादौ वृद्धौ कृतायां कार्यकाल पक्षे कथं पदत्वम्? उभयत आश्रयणे ऽन्तादित्वाभावात् यस्माद्वहितस्तदादितदन्तत्वाभावादत आह ---

एकदेशविकृतमनन्यवत्॥३६॥

अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतराम्। अत एव तादृशादर्थबोधः, अन्यथा शक्ततावच्छेदकैमुपूर्व्यज्ञानात् ततो बोधो न स्यात्।
एवञ्च रानिति मान्तस्य यस्माद् विहितस्तत्वम्, औ इत्यस्य परादिवत्वेन सुप्त्वमिति तदादितदन्तत्वम् आर्थसमाजग्रस्तम्।

एतेनायं न्यायः शास्त्रीयकार्य एव शास्त्रीविकार एवेत्यपास्तम्। विकृतावयव निबन्धन कार्ये तु नायम्, छिन्ने पुच्छे शुनि पुच्छवत्वव्यवहारवत् विकृतावयवव्यवहारस्य दुरुपपादत्वात्।
एवमक्तपरिमाणग्रहणेऽपि नायम्, उक्तयुक्तेः।
एतत्"येनविधिः"इत्यत्र भाष्यकैयटयोर्ध्वनितम्।

यत्र त्वर्धं तदधिकं वा विकृतम्, तत्र जातिव्यञ्जकभूयो ऽवयवदर्शनाभावेन तत्वाप्रतीतौ कार्यसिध्यर्थं विकृतानल्पावयवत्वप्रतीत्यर्थं च"सथानिवत्"सूत्रम्। क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम्। तेन ऽाभीयात् इत्यादि सिद्धिः। स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः"प्रथमयोः पूर्वसवर्णः"इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः।।

इति श्रीनागेशभट्टविरचिते परिभाषेन्दुशेखरे शास्त्रत्वसम्पादनोद्देशनामकं प्रथमं प्रकरणम्।।

# बाधबीजनामकं द्वितीयं प्रकरणम्

पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ।। ३७ ।।पूर्वात्परं बलवत्, विप्रतिषेध शास्त्रात्, पूर्वस्यपरं बाधकमिति यावत्।।

नन्वेवम् 'भिन्धि' इत्यत्र परत्वात् तातङा बाधितो धिर्न स्यादत आह :-पुनः प्रसङ्ग विज्ञानात् सिद्धम् ।। ३८ ।।

नन्वेवम् 'तिसृणाम्' इत्यत्र परत्वात् तिस्रादेशे पुनस्त्रयादेशः स्यादत आह :-सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव ।। ३९ ।।
तत्र क्वचिच्चरितार्थयोरेकस्मिन् युगपदुभयोः कार्ययोरसम्भवेन बाधकाभावात् पर्यायेण तृजादिवच्छास्त्र
यत्तु कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्ययोरचरितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति 'सकृद्गति' न्यायसिद्धिः। अत्र पक्षे एतन्नियमवशादेतल्लक्ष्यविषयक पूर्वशास्त्रानुपप्लव एव।
जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगदुभयासम्भवरूपविरोधस्थल उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिरित्याहुः, तन्न ; व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्ष इत्यत्र मानाभावात्।
किञ्च नहि भाष्योक्त तृजादिदृष्टान्तस्य व्यक्तिवक्ष एव सर्व विषयत्वम् न दातिपक्ष इत्यत्र मानमस्ति।
अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूप विषयलाभेन चरितार्थयोरियं व्यक्तिविरोधात् स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम्। जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव ; नैतद्व्यक्तिविषयकत्वमित्यत्र नियामकाभावः।
तत्र लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृषटान्ताश्रयणम्, क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्यसम्मत मार्ग एव युक्त इति बोध्यम्।
स्पष्टम्।
यथा 'शिष्टात्' इत्यादौ तातङ्शीभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तनन्तर्यासम्भवः। यद्यपि तातङादेः स्थानिवद्भावेनास्थ्येव तत्, तथाप्यादेशप्रवृत्युत्तरमेव सः, न तु तत्प्रवृत्तिकाले।
एवं नुम्तृज्वत्वयोः 'प्रियक्रोष्टूनि' इत्यादौ युगपदसम्भवः, यदागमा इत्यस्य नुम्प्रवृत्युत्तरं प्रवृत्तः। एवम् 'भिन्धि' इत्यत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चासम्भवो बोध्यः। नुम्नुटोरपि नुट्यजादिविभक्त्यानन्तर्यबाधः, नुमि ह्रस्वन्ताङ्गबाध इत्यसम्भवात् विप्रतिषेधः।

विकरणेभ्यो नियमो बलीयान् ।। ४० ।।
एवञ्च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः। शबादिभ्यस्तु पूर्वमेव नियमः।
यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशाः, लकारविशेषापेक्षत्वात् स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः।
शास्त्रानर्थक्यं तु वृद्धिसंज्ञा सूत्रे भाष्येतिरस्कृतम्। सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्त्थ कैयट रीत्या प्रधानानुरोधेन गुणभेदकल्पना तावत्प्रकृति कल्पनया कार्या, प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः।।

परान्नित्यं बलवत् ।। ४१ ।।कृताकृतप्रसङ्गित्वात्। तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति, नित्यस्य बलवत्वे बीजम्।।

तदाह :- कृताकृतप्रसङ्गि नित्यम्, तद्विपरीतमनित्यम् ।। ४२ ।।
अत एव 'तुदति' इत्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति।।

यद्व्यक्तिसम्भन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्भन्धितयैव पुनः प्रवृत्तौकृताकृतप्रसङ्गित्वमित्याशखयेनाह :-
शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ।। ४३ ।।
इदं 'शदेः शितः' इति सूत्रे भाष्ये स्पष्टम्। तत्र हि 'न्यविशत' इत्यत्र विकरणे कृते तदन्तस्याड्, अकृते विकरणे धातुमात्रतस्येत्यडनित्य इत्युक्तम्।।

एतत्तुल्यन्यायेनाह :-शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ।। ४४ ।।

एतन्मूलकमेवाह :-लत्रणान्तरेण प्राप्नुवन् विधिरनित्यः ।। ४५ ।।

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादि विचारो यदाऽपि व्यक्तिविशेषाश्रयणाभावः, तदाह :-क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ।। ४६ ।।
कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकम्, न तु बाधकाबाधित फलोपहित प्रसङ्गोऽपि तथैति भावः।।

तदाह :-यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ।। ४७ ।।

क्वचित्तु बाधकाबाधित फलोपहित प्रसङ्ग एव गृहयते तदाह :-यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ।। ४८।।
सप्तमे कैयटेनैतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम्। वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालितः प्राबल्यं न व्यवहरन्ति, भगवत्सहायैः पाण्डवैर्जये लब्धेपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति
सर्वं चेदं लक्ष्यानुरोधाद् व्यवस्थितम्।।
४९
इति पठ्यते। यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च, तत्रेच्छयान्यतरत्तदुभयं वा तस्य बलवत्वे नियामकमुल्लेख्यम्। अत एव तत्र परत्वान्नित्यत्वाच्चेति भाष्ये उच्यते।

नित्यादप्यन्तरङ्गं बलीयः; अन्तरङ्गे बहिरङ्गस्यासिद्धत्वात्। तदाह :-असिद्धं बहिरङ्गमन्तरङ्गे ।। ५० ।।
स्त्रीत्वरूपार्थनिमित्तकतिस्रापेक्षयाऽन्तरङ्गत्वात् त्रयादेशे तदसङ्गतिः स्पष्टैव।
एतेन 'गौधेरः, 'पचेरन्' इत्यादावेयादीनामङ्गसंज्ञासापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वाद् वलिलोपो न स्यादिति परास्तम्। एयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च।
अन्तरङ्गत्वाद् यणो गुणबाधकत्वमिष्यते, तन्न सिध्येत्, ऊनशब्दमाश्रित्य यणादेशः, न शब्धमाश्रित्य गुण इत्यन्तरङ्गत्वाद् गुण एव स्यादित्युक्तम्।
अत्र कैयटः। सिवेर्बाहुलकादौणादिके न प्रत्यये गुणवलोपोठां प्रसङ्गे ऊठपवादत्वाद् वलोपं बाधते, गुणं त्वन्तरङ्गत्वाद् बाधते। गुणोह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति। ऊठ् तु वकारान्तमङ्गमनुनासिकादिञ्च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः। तत्र कृते यण् गुणौ प्रप्नुत इति।
एवञ्च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमितिचेत्, न ; तदन्तविधावपि बहुपदार्थापेक्षत्वरूप बहिरङ्गत्वस्य गुणे सत्वेन तत्र दोषकथनपरभाष्यासङ्गतेः।
बहिरङ्गन्तरङ्गशब्दाभ्यां बहवपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयाऽलाभाच्च। तथा सत्यसिद्धं बहवपेक्षमल्पापेक्ष इत्येव वदेत्।
अत एव विप्रतिषेधसूत्रभाष्ये 'गुणाद्यणादेशोऽन्तरङ्गत्वात्' इत्यस्य 'स्योनः' इत्युदाहरणम्, न तु गुणादूठ् अन्तरङ्गत्वादित्युक्तम्।
त्वद्रीत्या तदपि वक्तुमुचितम्। प्रथम्यात् तदेव वा वक्तुमुचितम्। मम त्वन्तरङ्गपरिभाषया तद्वारणासम्भव्त् तन्नोक्तम्।
किञ्च सिद्धान्ते नित्यत्वाद् गुणात्पूर्वमूठ्, गुणस्तु यणा बाधितत्वादनित्यः। ऊनशब्दमाश्रित्येत्यादि भाष्यासङ्गत्या चिन्त्यम्।
वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति तु न युक्तम्। तत्सूत्रे भाष्य एव व्रश्चादिषु लोपातिप्रसङ्गमाशङ्क्योपदेशसामर्थ्यान्न।
नच 'वृश्चति' इत्यादौ चारितार्थयम्, बहिरङ्गतया सम्प्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति भाष्योक्तेः।
न लोपस्यहि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम्, तच्च, न ; संज्ञाकृत बहिरङ्गत्वस्यानाश्रयणात्। 'पञ्च' इत्यत्र निषेधस्तु स्त्रियां यत्प्राप्नोति, तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति भोध्यम्।
अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्धमित्यर्थः। व्रश्चादिषु पदसंस्कार पक्षे समानकालत्वमेव द्वयोरिति बोध्यम्।
एतेन 'अन्तरङ्गं बहिरङ्गाद् बलीयः' इति परिभाषान्तरमित्यपास्तम्। एनामाश्रित्य 'विप्रतिषेध' सूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च।
अन्तरङ्ग शास्त्रत्वमस्यालिङ्गम्।
सम्मतेऽर्थे 'भिनत्ति' इत्यादावदोषाच्च।
अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वाहेर्वा--ण्विविचावनभिधानान्नस्त एव।
वार्यूहेरित्यादि तु 'ऊहतेः' क्विपि बोध्यम्। धातूनामनेकार्थत्वान्नार्थासङ्गतिः। 'प्रौहः' इत्याद्यसाध्वेव,
न च कार्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम्, पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य

तन्निरूपितबहिरङ्गत्वाभावात् तया तस्यासिद्धत्व प्रतिपादनासम्भवात्।
न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम्, एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः।
णिलोपात् पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव।
एवञ्चान्तरङ्गतरार्थतोपसर्गनिमित्तः सुट् सम् -- कृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्तते, ततो द्वित्वादि।
यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम्।
नैषा सिद्धान्त्युक्तिः, एतावताप्यपवादत्वहानेः। अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाध
दर्शनात्।
किञ्चोक्तरीत्या परत्वेन बाधसिद्धेः। किञ्चात्राधिकापेक्षत्वेनैव बहिरङ्गत्वम्, न केवलविशेषापेक्षत्वेनेति नतद्भाष्यारूढं विशेषापेक्षस्य बहिरङ्गत्वम्।
अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिः, तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये।
न चार्थकृतबहिरङ्गत्वस्यानाश्रयणादिदमयुक्तम्, एकदेश्युक्तित्वेनादोषात्।
भाष्यकैयटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु।
नन्वेवं 'असुस्रवत्' इत्यत्रलघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यदिति चेत्,न

**तत्रान्तःकार्यत्वरूपान्तरङ्गत्वसत्वात्। अन्तःकार्यत्वं च पूर्वोपस्थितनिमित्तकत्वम्, अङ्गशब्दस्य निमित्तपरत्वात्।**

तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव। यथा 'पट्व्या' इत्यत्र पदस्य विभज्यान्वाख्याने,
यत्तु एवं रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति, तच्चिन्त्यम्, 'स्रजिष्ठः' इत्यादौ विन्मतोर्लुकि
ईदृशरीत्या बहिरङ्गासिद्धत्वस्य क्वाप्यनाश्रयणाच्च, परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च।
नव्य मतेऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः। आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्वम्, अन्तरङ्गस्यासिद्धत्वादित्यसिद्धवत् सूत्रे भाष्ये स्पष्टम्।

नन्वेवम् 'अक्षद्यूः' इत्यादौ बहिरङ्गस्योठोऽसिद्धत्वादन्तरङ्गो यण् न स्यात्, अत आह :-नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ।। ५१ ।।
बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्व प्रवृत्तौ किं तेनेति। तन्न, इणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वय सम्बन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात्।
परिभाषार्थस्तु -- अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्व प्रक्लृप्तिः। बहिष्पदेन बहिरङ्गम्, तस्य भावो बहिरङ्गत्वम्। तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः, न प्राप्तिरिति।
'असिद्धं बहिरङ्गम्' इत्युक्त्वा 'नाजानन्तर्य इति वक्ष्यामि' इति भाष्याक्त्या तत्रत्यस्य अन्तरङ्ग इत्यस्यानुवृत्तिसूचनात्। तेन 'पचावेदम्' इत्यादौ न दोषः। अन्तरङ्गस्याच्स्थानिक कार्यस्यैत्वस्य अन्यनन्तर्य निमित्तकत्वाभावात्।
'जातस्य बहिरङ्गस्य' इत्युक्त्या 'अजये इन्द्रम्' 'धियति' इत्यादौ बहिरङ्गदीर्घ गुणादेरसिद्धत्वं सिद्धम्।
क्यजानन्तर्यसत्वान्न दोषः।
सत्वे तत्र तदप्रप्तेरसङ्गतिः स्पष्टमेवेति वाच्यम् ; तेन भाष्येणास्या अनवकाशत्वबोधनात्। एतज्ज्ञापकेन अन्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात्।
ध्वनितमित्यलम्।।

नन्वेवम् 'गोमत्प्रियः' इत्यादौ पदद्वयनिमित्तकसमाश्रितत्वेन बहिरङ्गं लुकं बाधित्वाऽन्तरङ्गत्वाद्धल्ङ्यादिलोपे नुमादयः स्युः, अत आह :- अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते ।। ५२ ।।
ननु 'तव पुत्रः, त्वत्पुत्रः' इत्यादौ तवममादिबाधमार्थं तदावश्यकमिति चेत्, एवं तर्ह्यत्रत्य
एवमेवैकार्थकाभ्यां प्रतिपादिकाभ्यां प्रातिपदिकणिचोऽप्यनभिधानं बोध्यम्। एतेन तत्राऽऽदेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम्।
ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरित्र्था। 'न चोत्सर्गसमानादेशा अपवादाः'
इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम्, तस्य श्नमकजादौ व्यभितारादिति चेत्, न; श्नमि मित्वेन, बहुचि पुरस्ताद्ग्रहणेन, अकचि प्राक् टेग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य
त्यागे मानाभावात्।
विदद्यात्। आकङि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनाऽन्त्यादेशत्वापत्तिः, अतस्तद्विधानम्, इदमेवच तज्ज्ञपकम्।
यद्यपि विरोधे बाधकत्वमिति वार्तिकमतेऽयं न्यायः, भाष्यकारस्तु विनापि विरोधं सत्यपि सम्भवे बाधकत्वमिच्छति, इत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमः, तथापि युष्मकाद्याऽऽदेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः। एतद् भाष्यमपि तत्स्वीकारे मानम्।
एवञ्च मपर्यन्तानुवृत्तिः 'त्वत्कृतम्' इत्यादौ मपर्यन्तस्याऽऽदेशविधानार्था। तत्र च अन्तरङ्गत्वात् त्वमावित्येव सिद्धे व्यर्था संतज्ज्ञपिका। ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या तदपवादत्वाभावेन मपर्यन्तस्यवाऽऽदेशार्थं सा चरितार्थेति तदाशयः।

यत्तु हरदत्तेनाऽन्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्यन्तासम्भवेन तदनुवृत्तिर्व्यर्था सती ज्ञपिकेत्युक्तम्, तत्, न; अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्तेः।
वस्तुत इदं ज्ञापकं वार्तिकरीत्यैव, भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहुः।
कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयटे उक्तम्।
अनेन न्यायेनाऽन्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इत्यन्यत्र विस्तरः।।
किञ्च वृद्धिरप्यत्र न प्राप्नोति, अन्तादिवत्वोभयाभावेऽपि पूर्वान्तवत्वेनैकादेशविशिष्टे पूर्वपदत्वेनेन्द्रशब्दस्य 'एकदेशविकृत' न्यायेन 'उभयत आश्रयणे नान्तादिवत्' इत्यस्याभावेन तदाश्रयणेन वोत्तरपदत्वेऽपि
न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विवति तत्सम्भव इति वाच्यम्; उत्तरपदाद्यच्स्थानिकत्वाद् वृद्धेस्तदभावेनाप्राप्तेस्ताद्रूप्यानतिदेशात्।
अन्यथा 'खट्वाभिः' इत्यादावपि पूर्वान्तवत्वेनादन्तत्वे भिस ऐसापत्तिरिति भाष्ये स्पष्टम्।
सम्पन्नस्तत्र कः प्रसङ्गो वृद्धेरिति।।

मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्व निपातः, अत आह :-पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गेऽप्येकादेशो न ।। ५३ ।।
सूत्रयोर्भाष्ये स्पष्टम्।।

नन्वेवमपि 'प्रधाय, प्रस्थाय' इत्यादावन्तरङ्गत्वाद्वित्वादिषु कृतेषु ल्यप् स्यादत आह :-अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ।। ५४ ।।
५५
विधायक सूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम्। तद्धि 'ईषतुः' इत्यादावियङादिव्यावृत्यर्थम्। एतत्परिभाषाभावे तु 'ईषतुः' इत्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्तद्व्यर्थम्। इयङ्वङौ ह्यभ्याससम्बन्धनिमित्तकत्वाद् बहिरङ्गौ।
न चेयङादिरपवादः, 'येननाप्राप्ति' न्यायेन 'इयति' इत्यादिसकललक्ष्य प्राप्त यणपवादत्वस्यैव निर्णयादिति प्राञ्चः।
न च 'इयाय' 'इयेष' इत्यादौ चरितार्थम्, तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च
अन्त्ये द्वितीयद्विर्वचनस्यैव सत्वेन त्वदुक्त प्रयोगस्यैव दुर्लभत्वात्। एवञ्च सम्पूर्ण सूत्रस्य ज्ञापकता युक्ता।
यद्यपि भाष्ये 'यदयमभ्यासस्यासवर्ण इत्यसवर्णग्रहणं करोति' इति ग्रन्थेनासवर्णग्रहणस्यैव
ज्ञापकता लभ्यते, तथापि 'न ह्यन्तरेण गुणवृद्धी असवर्णपराभ्यासो भवति' इति तदुपपादन ग्रन्थेन सम्पूर्ण सूत्रस्यैव ज्ञापकता लभ्यते।
अग्रेऽपि 'नैतदस्ति ज्ञापकम्, अत्यर्थमेतत् स्यात्' इत्यनेन सूत्र सार्थक्यमेव दर्शितम्। असवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत् सार्थक्यमेव दर्शितं स्यात्।
न च 'अकृतव्यूह' परिभाषया 'इयेष' इत्यादौ सवर्णदीर्घाप्राप्तिः, यदि दीर्घोनस्यात्, तर्हि
गुणः स्यादिति सम्भावनायाः सत्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं सम्पूर्ण सूत्रस्य ज्ञापकतेति वाच्यम्, तस्या असत्वात्। सत्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशक बहिरङ्गविधेः प्रप्तिः, तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च।
न चान्तरङ्गत्वाद् दीर्घोपि 'इयाय' इत्यादौ पूर्वान्तवत्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्ण इयङ्विधानेन सूत्रं चरितार्थम्।
सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्यित्व एव।
न चैवमपि 'इयाय' इत्यादावियङ् दुर्लभः, तत्र कर्तव्ये वृद्ध्यादेः स्थानिवत्वेन 'असवर्णे' इति प्रतिषेधादिति वाच्यम्, सूत्रारम्भसामर्थ्यादेव स्थानिवत्वाप्रवृत्तेः। तच्च सामान्यापेक्षम्। अभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्वं नेति।
इयञ्चानित्या 'छवोः' इति सतुग्निर्देशात्। अन्यथाऽन्तरङ्गत्वात् पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः।।

नन्वेवम् 'सेदुषः' इत्यादौ क्वसोन्तरङ्गत्वादिदिट, ततः सम्प्रसारणेऽपीटः श्रवणापत्तिरिति चेत्, अत्र केचित् -अकृतव्यूहाः पाणिनीयाः ।। ५६ ।।
न कृतो विशिष्ट ऊहः -- निश्चयः, शास्त्रप्रवृत्तिविषयो यैरित्यर्थः। भावि निमित्तविनाश इत्यद्याहारः। बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात् सम्भाविते ऽन्तरङ्गं नेति यावत्।
कृतदीर्घेभ्यः प्रत्ययोत्पत्यर्थम्। अन्यथाऽन्तरङ्गत्वाद् दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्ट एव।
न चात्रैकादेशप्रवृत्ति समये वृद्ध्यप्राप्त्यैकादेशे कृत आदेशे वृद्धेः प्रप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम्, तद्द्वारैव तन्निमित्तविनाशसत्वेनाक्षतेः।
न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम्, समर्थग्रहणेनैतद्
विषये तस्या अप्रवृत्तेरपि ज्ञापनात्।
यत्तु समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति। तन्न, असिद्ध परिभाषाया समकालप्राप्त बहिरङ्गस्य पूर्वं जातबहिरङ्गस्य चान्तरङ्गे कर्तव्येऽसिद्धत्वं बोध्यते, न तु जातेऽन्तरङ्गे तस्य तत्व बोध्यते, मानाभावात्, फलाभावाच्च।
एतत् प्रवृत्तौ च निमित्तविनाशसम्भावनापि निमित्तम्। अत एव 'गोमद्दण्डी' इत्यादौ हल्ङ्यादि लोपो न।
अन्यथा हल्ङ्यादि लोप काले सामासिक लुकोऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः। अस्ति चात्रापि 'यदि लोपो न स्यात्, तर्हि लुक् स्यात्' इति सम्भावना।

स्पष्टमेवेत्याहुः।
लोकन्याय सिद्धश्चायमर्थः। तथा हि लोके निमित्तं द्विविधं दृष्टम्--कार्यस्थितो नियामकं तदनियामकं च।
आद्यं यथा न्यायनयेऽपेक्षा बुद्धिः, तन्नाशे द्वित्वनाशाभ्युपगमात्। वेदान्ति नये प्रारब्धस्य विक्षेपस्थिति नियामकत्वं च प्रसिद्धमेव।
द्वितीयं यथा दण्डादि, तन्नाशेऽपि घटनाशदर्शनात्। शास्त्रे लक्ष्यानुरोधाद् व्यवस्था।
भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायःनापि सम्प्रतिपन्नो दृष्टान्तः। समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चर्तार्थ्यसम्भवे लोकसिद्धापूर्वताद्दशार्थज्ञपकत्वे मानाभाव इति तदाशय इति बोध्यम्।
यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजम्, तथापि पूर्वप्रवृत्तौ सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः। निरूपितं चैतद् बहुशः शब्देन्दुशेखरादौ।
किञ्च विभज्यान्वाख्याने 'सु उत्थित अस् इ' इत् स्थिते 'वार्णादाङ्गं बलीयः' इति प्राप्त वृद्धिवारणाय समर्थग्रहणमित्यत्रैव कैयटे स्पष्टम्।
सम्प्रसारणे कृते आतो लोपो यथा स्यात्' इति भाष्ये उक्तम्। पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं सम्प्रसारणे इटोप्राप्तावुस्निमित्तक एवाऽऽतो लोप इति तदसङ्गतिः।
अत एव 'चौप्रत्यङ्गस्तप्रतिषेधः' इति वचनं वार्तिककृताऽऽरब्धम्, भाष्यकृता च न प्रत्याख्यातम्। प्रत्यङ्गं = अन्तरङ्गम्। अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव।
न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाशयः, अवश्यमत्रेत्यक्षरस्वारस्यभङ्गापत्तेः।
ततो गच्छतीत्यादि सम्बन्धे 'हरिः गच्छति' इत्याद्येव साधु। तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक्।।

प्राप्त इति भावे क्तः, येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यप्राप्तावित्यर्थः। नञ् द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात्।
एवञ्च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः।
इत्यादावपि शप् स्यादिः प्रप्नोति।
एवमत्र तत्प्रवृत्युत्तरं चारितार्थ्येऽपि तदव्याप्तोऽवक्शो नास्तीति सममेव।
द्वितीयद्विर्वचनेन बाधः। यथा वाऽऽदेरपि प्रवृत्या चरितार्थेन 'आदेः परस्य' इत्यनेन 'अलोऽन्त्यस्य' इत्यस्य बाधः।

यत्तु 'दयतेर्दिगि' इति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तम्, तत् प्रौढ्या।
ध्वनितञ्च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन।
क्वचित्तु सर्वथाऽनवकाशत्वादेव बाधकत्वम्। यथा ङेरामो याडादिबाधकत्वम्। न हि याडादिषु कृतेषु ङ्राम् प्रप्नोति, निर्दिश्यमानस्य व्यवधानात्। तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः। तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव। यथा तत्रैव याडागमः। अप्राप्तौ तु न, यथा 'पचेयुः' इत्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घाभावः।।

तदेतत् पठ्यते --क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ।। ५८ ।।
न च 'येन नाप्राप्ति' न्यायेनापवादत्वमप्यस्य सुवचम्, तस्य चरितार्थविषयताया उक्तत्वात्।
तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासङ्गतिरिति स्पष्टमेव।
'काञ्चनी' इत्यादौ काञ्चनेननिर्मितेत्यर्थे शैषिकोऽण् बोध्यः।
अत्रेदं बोध्यम् -- 'येननाप्रप्ते' इत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थः, तदा स्व विषये स्वतरद्यद्यत् प्राप्नोति तद् बाध्यम्, विध्यन्तराप्राप्तविषयाभावात्।
इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते। अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति, विनिगमनाविरहात्।
यदि तु येनेत्यस्य लक्षणेनेत्यर्थः, कार्येणेत्यर्थो वा तदा बाध्यविशेषचिन्ता। अनवकाशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यम्, उत तद्बाधेनेत्येवं विशेषचिन्ता सम्भवति, यद्युदाहरणमस्ति।।

तत्र कार्येणेत्यर्थे पररूपत्ववच्छिन्ने कात्य आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे न निर्णीते किं शास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाह -- पुरस्तादपवादाः अनन्तरान् विधीन् बाधन्ते, नोत्तरान् ।। ५९ ।।
अवश्यं स्वपरस्मिन् बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभाव आकाङ्क्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम्।।

मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते, नोत्तरान् ।। ६० ।।
६१?

ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशेऽल्विधौ, स्थानिवत्वाभावादादेशो न स्यादिति तद्वैयर्थ्यापत्तिः, अत आह :-पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ।। ६२ ।।
लक्षणैकचक्षुषको ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिष्चय उत्सर्गेण तत्तल्लक्ष्यं संस्करोति। अन्यथा विकल्पापत्तिरित्यर्थः।

अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः। 'अपवादो यद्यन्यत्र चरितार्थः' इति न्यायस्य तु नात्र प्प्तिः, अन्तादेशप्राप्तिविषये चारितार्थ्याभावात्।।

लक्ष्यैकचक्षुष्कस्तु तच्छास्त्र पर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति,तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः, तदाह -
प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशन्ते ।। ६३ ।।

एतन्मूलकमेव नवीनाः पठन्ति :-उपसञ्जनिष्यमाणनिमित्तोप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति ।। ६४ ।।
यत्त्वभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य चेति प्रतीकमुपादाय यथा 'न सम्प्रसारण इति परस्य यणः पूर्वं सम्प्रसारणम्, पूर्वस्य तु तन्निमित्तकः प्रतिषेधः' इत्युक्तम्, तत्तु तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणम्। यत्त्वपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति, तन्न, 'अभिनिविशतेऽपवादविषयम्' इत्यादिपदस्वारस्यभङ्गापत्तेः।
पदजन्यपदार्थोपस्थतौ वाक्यार्थबोधाभावे कारणभावाच्च।
अत्र 'देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं न' इति न्यायस्य विषय एव नास्ति। हते
देवदत्त उन्मज्जनं न देवदत्तहननोद्यतस्य, हनने तु भवत्येवोन्मज्जनम्। प्रकृतेऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननम्,
किन्तु हननोद्यमसजातीयं प्रसक्ति मात्रम्, प्रसक्तस्यैव निषेधात्।

ननु 'अयजे इन्दिरम्' इत्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्ण दीर्घेम बाधः स्यात्, अत आह :-अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ।। ६५ ।।
निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात्। एवञ्च प्रकृतेऽन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्गुणयोरपवादोऽपि बाध्यते। पूर्वोपस्थितिनिमित्तत्वरूपान्तरङ्गत्वविषय इदम्।

ननु 'अजीगणत्' इत्यादौ गणेरीत्वं निरवकाशत्वाद्धलादिःशेषं बाधेत, तत्राह :-अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ।। ६६ ।।
इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका। तेन 'अचीकरत्' 'मीमांसते' इत्यादि सिद्धम्।

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात्। न च तृन्नपवादः, असरूपापवादस्य विकल्पेन बाधकत्वात्। अत आह :-ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति ।। ६७ ।।
ताच्छीलिकेष्विति विषयसप्तमी। तेन ताच्छीलिकैरताच्छीलिकैश्च वाऽसरूपविधिर्नेति बोध्यम्।

नन्वेवम् 'हसितं छात्रस्य हसनम्' इत्यादौ घञ्, 'इच्छति भोक्तुम्' इत्यत्र लिङ्लोटौ, 'ईषत्पानः सोमो भवता' इत्यत्र खल् प्राप्नोतीत्यत आह :-क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति ।। ६८ ।।
इदञ्च वाऽसरूपविधेरनित्यत्वात् सिद्धम्। तदनित्यत्वे ज्ञपकं च 'अर्हे कृत्यतृचश्च' इति।
६९?
७०?
इति श्री नागेशभट्टविरचिते परिभाषेन्दुशेखरे बाधबीजनामकं द्वितीयं प्रकरणम्।।

# शास्त्रशेषनामकं तृतीयं प्रकरणम्

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधक प्रत्यय विशिष्टस्यापि तेन ग्रहणं बोध्यम्। अपिना केवलस्यापीत्यर्थः।
विभक्तिनिमित्तककार्ये च नेत्यपि तत्रैव।
तत्र समासान्तविधावयवग्रहण एव न, समाससङ्घातग्रहणे तु प्रवर्तत एव, स्वरविधावेव समाससङ्घातग्रहणे
नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इति चेत्, न ; अनया परिभाषया स्त्रीप्रत्यय समभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्व तद्व्याप्य धर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यत इत्याशयात्।। ७१ ।।

विभक्तौ लिङ्गविशिष्टाग्रहणम् ।। ७२ ।।
७३ ?

नन्युक्तमिव युक्तं च यत् किञ्चिद् दृश्यते तत्र तस्माद् भिन्ने तत्सदृशेऽधिकरणे द्रव्ये कार्यं विज्ञायते। हि = यतः तथार्थगतिरस्ति। न हि

'अब्रह्मणमानय' इत्युक्ते लोष्टमानीय कृती भवति। अतश्चव्यन्तभिन्ने च्व्यन्तसदृशेऽभूततद्भावविषये क्यङिति नोक्त दोषः।
अत्रान्यसदृशेत्युक्त्वा सादृश्यस्य भेदाघटितत्वं सूचयति। निरूपितं चैतन्मञ्जूषायाम्।। ७४ ।।

ननु 'व्याघ्री, कच्छपी' इत्यादौ सुबन्तेन समासात् ततोऽप्यन्तरङ्गत्वाट्टाप् अदन्तत्वाभावाज्जाति लक्षणो ङीष् न स्यात्, अत आह -- गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ।। ७५ ।।
अस्या अनित्यत्वात् क्वचित् सुबुत्पत्यनन्तरमपि समासः।
यथा सा हि तस्य धनक्रीतेति।
अन्ये त्वनित्यत्वे न मानम्, तत्राजादित्वाट्टाबित्याहुः। अत एव 'कुम्भकारः' इत्यादौ षष्ठी समासोऽपि सुबुत्पत्तेः पूर्वमेव। षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमिति भाष्ये स्पष्टम्।
तत्र हि 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेन' इति वार्त्तिकम्। अथवा 'विभाषा षष्ठी समासो यदा न षष्ठीसमासस्तदोपपदसमासः' इति तत्प्रत्याख्यानं च।
यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकम् 'न वा षष्ठीसमासाभावादुपपदसमासः' इति वार्तिककृतोक्तम्, तथापि तदुभयप्रत्याख्यानपरम्, 'अथवा' इत्यादि भाष्यं परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन कृद्भिः समाससमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात्।
एतेनैषा कारकतद्विशेषयोरुपादान एवेति परास्तम्। अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादि
शास्त्रवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थालाभाच्च।।
७६?

बहुव्रीहौ तद्गुणसंविज्ञानमपि ।। ७७ ।।अपिना अतद्गुणसंविज्ञानम्। तेषां गुणानामवयवपदार्थानां संविज्ञानं विशेषान्वयित्वमिति तदर्थः।
यत्र समवायसम्बन्धेन सम्बन्ध्यन्यपदार्थः, तत्र प्रायस्तद्गुणसंविज्ञानम्। अन्यत्र प्रायोऽन्यत्। 'लम्बकर्णचित्रगू' उदाहरणे।
'सर्वादीनि, जक्षत्यादयः' इति चोदाहरणे। सर्वनामसंज्ञा सूत्रे भाष्ये स्पष्टा।।
७८?
तद्धि उत्तरत्रोभयोः सम्बम्धार्थम्। उदाहरणानि स्फुटानि।

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह --स्वरविधौ व्यञ्जनमविद्यमानवत् ।। ७९ ।।
८०?
इति सूत्रे भाष्ये।।
८१?
८२?
एकानुबन्धकग्रहणे सम्भवतीति त्वर्थो न भाष्यादिसम्मत इत्यन्यत्र विस्तरः।।

ननु 'कुटीरः' इत्यादौ स्वार्थिकत्वात् स्वार्थिकानां प्रकृतितो लिङ्गवतनानुवृत्तेर्न्यायप्राप्तत्वात् पुंस्त्वानुपपत्तिः, 'अप्कल्पम्' इत्यत्र नपंसकैकवचनयोरनुपपत्तिश्चेत्यत आह --क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवतनान्यतिवर्तन्ते ।। ८३ ।।
८४?

सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।। ८५ ।।
सन्निपातः = द्वयोः सम्बन्धः, तन्निमित्तो विधिस्तं सन्निपातं यो विहन्ति, तस्यानिमित्तम्।
उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा।
सर्वविधसन्निपातग्रहणादेव 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्' इत्येतत्परिभाषा
दोषनिरूपणावसरे वार्तिककृतोक्तम्, -- 'न हि प्रत्ययः पूर्व पर सन्निपात निमित्तकः, स एव च सन्निपात शब्देन गृह्यत इति मत्वा न प्रत्ययः सन्निपातनिमित्तकः इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तर्ह्यनिमित्तं स्यादित्येकदेशिनोक्तम्' इति न तद्भाष्यविरोधः।
किञ्चैवं 'शैवः, गार्गायः, वैनतेयः' इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्या वर्णाश्रय इत्यस्य वैयर्थ्यम्।
सन्निपातलक्षणविधित्वमस्या लिङ्गम्। स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातः, तद्विघातस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति।
न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्, आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः।
किञ्चान्तरङ्गे कर्तव्ये बहिरङ्गस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभाः।
एवञ्च पूर्वत्रासिद्धीयेऽपि कार्य एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत्, न; 'कष्टाय' इति निर्देशेनैतस्या अनित्यत्वात्।
न च 'कुम्भकारेभ्यः, आधये' इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासङ्ग
तिः। अनया परिभाषया लुग् माभूत्, अव्ययत्वं तु स्यादेव। लुका हि तदीयसन्निपातस्य विघातः, नाव्ययसंज्ञया। संज्ञाफलं त्वकच् स्यादिति

वाच्यम्, एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परम्परया वा स्वनिमित्तसन्निपातविघातकस्य स्वयमनिमित्यमित्यर्थेनादोषात्। एतेनात्राकच् स्यादित्यपास्तम्।
न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽप्यकजेकवाक्यतापन्नास्यादिति वाच्यम्, अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात्, लुगेकवाक्यतापन्ना तु न गुणादितोऽन्तरङ्गा, उभयोरपि शब्दतः सुबाश्रयत्वात्।
कष्टाय। इतोऽन्यत्र प्रवृत्तिरेव, 'दोषाः खल्वपि साकल्येन परिगणताः' इति भाष्योक्तेरन्यत्रविस्तरः।।
८६?

ताच्छीलिके णेऽण्कृतानि भवन्ति ।। ८७ ।।
८८?
भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम्।

ननु 'सर्वके, इच्चकैः' इत्यादौ सर्वनाव्ययसंज्ञे न स्याताम्, अत आह --तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।। ८९ ।।
९०?
कैयटः। तन्न, साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासम्भवात्।
९१?

ननु 'युष्मभ्यम्' इत्यादौ 'भ्यसः' इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोपे एत्वं स्यात्, अत आह --अङ्ग वृत्ते पुनर्वृत्तावविधिः ।। ९२ ।।
अङ्गे = अङ्गाधिकारे वृत्तम् = निष्पन्नं यत्कार्यम्, तस्मिन् सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ = प्रवृत्तावविधानं भवतीत्यर्थः।
९३?
इदञ्च विधेयकोटौ संज्ञापूर्वकत्व एव। 'तेन स्वायम्भुवम्' इत्यादि सिद्धम्।।

तथा निलोडित्येव सिद्धे आनिग्रहणात् --आगमशास्त्रमनित्यम् ।। ९४ ।।
तेन सागरं तर्त्तुकामस्येत्यादि सिद्धम्।।
९५?
तेन 'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम्।।

तथा चक्षिङो ङित्करणात् --अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ।। ९६ ।।
तेन 'स्फायन्निर्मोकः' इत्यादि सिद्धम्।।
९७?
किञ्च ज्ञापितेऽप्यानीत्यस्य न सार्थक्यम्, आडागमशून्यप्रयोगस्याप्रसिद्धेः।
एतेन यत्कैयटेन केचिदित्यादिनाऽस्यैव वाग्रहणस्य तदनित्यत्वत्रापकतोक्ता, साऽपि चिन्त्या,प्रत्याख्यानपरभाष्यविरोधात्, तनादि सूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च। चक्षिङो ङकारस्यान्तेदित्वाभावसम्पादनेन चारितार्थ्याच्च।।

एवमेव --आतिदेशिकमनित्यम् ।। ९८ ।।

एवमेव --सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ।। ९९ ।।
इत्यादि भाष्यानुक्तं बोध्यम्। 'स्वायम्भुवम्' इत्यादि लोकेऽसाध्वेव, इत्यन्यत्र विस्तरः।।

यदपि - ननु हन्तेरयङ्लुक्याशीर्लिङि वधादेशो न स्यात्, अत आह --प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।। १०० ।।
षाष्ठद्वित्वस्य द्विःप्रयोगसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम्।
अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति। तदपि न, भाष्येऽदर्शनात्। किञ्च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्वबोधनेऽपि समुदायस्य तत्वबोधने मानाभावः।
अन्यथा त्वदुक्तरीत्या 'एकाज्द्विर्वचन' न्यायेन समुदायस्यैवादेशापत्तौ तदसङ्गतिः स्पष्टैव।
तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या।
१०१?
अनूद्यमान विशेषणेषु तन्नियामिका परिभाषा नोपतिष्टत अति तदर्थः।
विध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्धतया सम्बन्धासम्भवेऽपि तद्विशेषेणव्यवस्थापकत्वेन
चरितार्थानां तद्विशेषेणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम्।

१०२?
एतेन 'क्रियाकारकसम्बन्धोन्तरङ्गः' इति तन्निमित्ता विभक्तिरन्तरङ्गा, उपपदार्थेन तु यत्किञ्चित् क्तियाकारकमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेत्यपास्तम्, 'नमस्यति' इत्यत्र नमः पदार्थेऽपि क्रियाकारकाभावे नैवान्वयात्। अत्र च नमः पदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव।

ननु 'अदमुयङ्' इत्यादौ पूर्वस्यापि मुक्त्वापत्तिः, अत आह --अनन्त्यविकारोऽन्त्यसदेशस्य ।। १०३ ।।
अनन्त्यसदेशानन्यसदेशयोरेकप्रयोगे युगपत्प्राप्तवन्त्यसदेशस्यवेति तदर्थः। अन्यथा धात्वादेर्नत्वसत्वे'नेता' 'सोता' इत्यादावेव स्याताम्, न तु 'नमति' 'सिञ्चति' इत्यादौ।
अन्त्यविकार इति च लिङ्गम्।
अन्त्येन समानो देशो यस्य सोऽन्त्यसदेशः। तत्वं चान्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम्।
कर्तव्या प्रतिविधेयं दोषेषु, प्रतिविधानं चोदत्तनिर्देशात् सिद्धमित्युपसंहारात्। 'मिमार्जिषति' इत्यर्थं चैषा। तत्र वृद्धेः पूर्वमन्तरङ्गत्वात् द्वित्वे परत्वादभ्यासकार्ये ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी। न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः, 'लक्ष्ये लक्षणस्य' इति न्यायेन पुनरप्रवृत्तेः।
एतत्सूत्रे प्रयोजनान्येतस्याः परिभाषाया न भवन्ति, व्यधादावनत्यसमानादेशयणोऽभावादिति। 'नैतानि
एतस्याः प्रयोजनानि' इति पाठोऽपि क्वचिद् दृश्यते।

नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ।। १०४ ।।
१०५?

ननु स्वस्रादित्वप्रयुक्तो मातृ शब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्यात्,अत आह --
अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ।। १०६ ।।
तेन शुद्ध रूढस्य जननीवाचकस्यैव ग्रहणम्, न परिच्छत्तृवाचकस्य। 'योगजबोधे तदनालिङ्गितशुद्धरूढजोपस्थितिः प्रतिबन्धिका' इति व्युत्पत्तिरेव तद्बीजम्। रथकाराधिकरणन्यायसिद्धोऽयमर्थः।
वीनामिति, तत्, न; तथा सति 'दीवेधीवीटाम्' इत्येव वदेदितेयन्ये।।

ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वात् 'गोक्षः' इत्याद्यपि स्यात्, अत आह --व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ।। १०७ ।।
१०८?
१०९?
११०?

सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।। १११ ।।
११२
श्रुतेनैव सम्बन्धः, नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः। प्रकरणादितः श्रुतेर्बलवत्वादिति भावः।
एवं च तत्र लिङ्गमस्थ्यादीनामेव विशेषणम्, नाङ्गस्य शिशीलुग्नुम्विधिषु तु गृहयमाणस्याभावात् प्रकरणप्राप्तङ्गस्यैव विशेषणम्।
११३
तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तः, तस्यैव ग्रहणम्, शीघ्रोपस्थितिकत्वात्। द्वितीयो हि विलम्बोपस्थितिकः। 'पै' इत्यस्य 'पा' इति रूपं लक्षणानुसन्धानपूर्वकं विलम्बोपस्थितिकम्। पिबतेस्तु
११४?

प्रत्येकं वाक्यपरिसमाप्तिः ।। ११५ ।।'देवदत्तादयो भोज्यन्ताम्' इत्यत्र भुजिवत्।।

नन्वेवं संयोगसंज्ञासमाससंज्ञाऽभ्यस्तसंज्ञा अपि प्रत्येकं स्युः, आ आह --क्वचित्समुदायेऽपि ।। ११६ ।।
'गर्गाः शतं दण्ड्यन्ताम्, अर्थिनश्च राजानो हिरण्येन भवन्ति' इत्यादौ दण्डनवत्। लक्ष्यानुरोधेन च व्यवस्था।।
११७
असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदकः, न विवक्षित इत्यर्थः।
जातिपक्षे तु नास्योपयोग इति बोध्यम्। 'यू' इत्यादौ दीर्घमात्रवृत्तिजातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः।।

ननु 'सर्वनामानि' इत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यात्, अत आह --बाधकान्येव निपातनानि ।। ११८ ।।
स्थान्यरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम्।

इत्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात् तद्विवक्षा। एतदर्थमेवासति यत्न इत्युक्तम्।
'अबाधकान्यपि निपातनानि' इति तु भाष्यविरुद्धम्।।

ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात् पूर्वमभ्यासह्रस्वाप्राप्तौ हलादिः शेषे सवर्ण दीर्घे ह्रस्वापत्तिः, अत आह -पर्जन्यवल्लक्षणप्रवृत्तिः ।। ११९ ।।
एवं च ह्रस्वस्यापि ह्रस्वे कृते 'लक्ष्ये लक्षणस्य' इति न्यायेन न पुनर्ह्रस्वः। तदुक्तम्
सम्पूर्णाष्टाऽध्याय्याचार्येणैकश्रुत्या पठितेत्यत्र न मानम्। क्वचित्पदस्यैकश्रुत्यापि पाठः, यथा दाण्डिनायनादिसूत्रे ऐक्ष्वाकेति। यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्रह्मणवत्, तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः।

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः।
'चतुर्भ्यः' इति तु स्पष्टार्थमेव। अत एव तत्प्रत्यख्यानं भाष्योक्तं सङ्गच्छते।

नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिः, अत आह --अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ।। १२१ ।।
यस्यार्थः प्रकृत्या प्रत्याय्यते, सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात् तस्य प्रत्ययत्वमिति न दोषः।

योगविभागादिष्टसिद्धिः ।। १२२ ।।इष्टसिद्धिरेव, न त्वनिषटापादनं कार्यमित्यर्थः। तत्तत्समानविधिकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम्।।
१२३?
१२४?

ननु 'द्रोग्धा द्रोग्धा, द्रोढा द्रोढा' इत्यादौ घत्वादीनामसिद्धत्वात् पूर्वं द्वित्वे एकत्र घत्वम्, अपरत्र ढत्वमित्यस्याप्यापत्तिरत आह --पूर्वत्रासिद्धमद्वित्वे ।। १२५ ।।
१२६?

ननु 'विव्याध' इत्यादौ परत्वाद्धलादिःशेषे वस्य सम्प्रसारणं स्यात्, अत आह --सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ।। १२७ ।।

यत्तु --क्वचिद् विकृतिः प्रकृतिं गृह्णाति ।। १२८ ।।

तथा --औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणम् ।। १२९ ।।
आत्वविषय एवात्मनेपदम्, प्रयोगस्थानामेवानुकरणस्य घुसंज्ञा सूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये। अन्त्यापि तत्र तत्रोपदेशग्रहणं कुर्वतः सूत्रकृतोवार्तिककृतश्चासम्मता।
'इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते -- यत्रास्यैतद्रूपमिति, रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते, 'क उपदेशो नाम' इति घुसंज्ञासूत्रस्थ भाष्येण प्रायोगिकासम्भवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासम्मता च ।
१३०
तदपि न, भाष्यानुक्तत्वात्। एकाज्ग्रहणस्य वधिव्यावृत्यर्थमावश्यकत्वाच्च।
न च वधिस्स्थान्युपदेश एकाजेवेति वाच्यम्, साक्षादुपदेशसम्भवेनैतद्विषये स्थान्युपदेशाग्रहणात्, उपदेशात्वावच्छेदेनैकाजित्यर्थाच्च।
न च भाष्ये यङ् लोपो 'बेभिदिता' इत्यादाविट्प्रवृत्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यः, 'बिभित्सति' इति दोषोपन्यासवद् यङ्लुकि दोषाणामुपन्यासेन तत्रेडिष्टः।
यङ्लोपेत्यादि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम्।
किञ्च, तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्वस्येवयङ्लुक्युपायाप्रदर्शनेन न्यूनतप्त्तिरिरिति वाच्यम्, इड्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात्। अन्यथा 'एकाज्ग्रहणं किमर्थम्' इति प्रश्नस्य 'उत्तरत्र जागर्त्यर्थमिह वध्यर्थम्' इत्युत्तरस्य च भाष्ये निरालम्भनत्वपत्तेः।
न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम्। एवं च 'बिभित्सति' इत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येव, उत्तरखण्डेऽस्तित्ववत्। एतच्च 'दयतेः' इति सूत्रे भाष्ये स्पष्टम्। एवं च प्रकृतभाष्यासङ्गतिरिरिति वाच्यम् ; आक्षेपे आक्षिप्तस्यान्वये च मानाभावात्।
यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति।
छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः।
भाषायां तु तादृशानामभाव एव। श्तिप्शबादिनिर्देशास्तु 'भवतेरः' इत्यादि सूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः।।

ननु 'जभोऽचि, रधेश्च, नेट्यलिटि' इत्येव सूत्र्यताम्, किं द्वीरधिग्रहणेनेत्याह --पदगौरवाद् योगविभागो गरीयान् ।। १३१ ।।
१३२?
इति शास्त्रशेषनामकं तृतीयं प्रकरणम्।।
इति श्रीमन्महोपाध्यायशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतः परिभाषेन्दुशेखरः समाप्तः।।